# श्रीभुवनेश्वरीमन्त्रगर्भनामसहस्रकम्

श्रीभैरव उवाच
देवि ! तुष्टोऽस्मि सेवाभिस्तवद्रूपेण च भाषया ।
मनोऽभिलषितं किञ्चिद् वरं वरय सुव्रते ॥ १॥

श्रीदेव्युवाच
तुष्टोऽसि यदि मे देव ! वरयोग्याऽस्म्यहं यदि ।
वद मे भुवनेश्वर्याः मन्त्रं नामसहस्रकम् ॥ २॥

श्रीभैरव उवाच
तव भक्त्या ब्रवीम्यद्य देव्या नामसहस्रकम् ।
मन्त्रगर्भं चतुर्वर्गफलदं मन्त्रिणां कलौ ॥ ३॥

गोपनीयं सदा भक्त्या साधकैश्च सुसिद्धये ।
सर्वरोगप्रशमनं सर्वशत्रुभयावहम् ॥ ४॥

सर्वोत्पातप्रशमनं सर्वदारिद्रयनाशनम् ।
यशस्करं श्रीकरं च पुत्रपौत्रविवर्द्धनम् ।
देवेशि ! वेत्सि त्वद् भक्त्या गोपनीयं प्रयत्नतः ॥ ५॥

अस्य नाम्नां सहस्रस्य ऋषिः भैरव उच्यते ।
पङ्क्तिश्छन्दः समाख्याता देवता भुवनेश्वरी ॥ ६॥

ह्रीं बीजं श्रीं च शक्तिः स्यात् क्लीं कीलकमुदाहृतम् ।
मनोऽभिलाषसिद्धयर्थं विनियोगः प्रकीर्तितः ॥ ७॥

॥ ऋष्यादिन्यासः ॥

श्रीभैरवऋषये नमः शिरसि । पङ्क्तिश्छन्दसे नमः मुखे ।
श्रीभुवनेश्वरीदेवतायै नमः हृदि । ह्रीं बीजाय नमः गुह्ये ।
श्रीं शक्त्ये नमः नाभौ । क्लीं कीलकाय नमः पादयोः ।
मनोऽभिलाषयसिद्धयर्थे पाठे विनियोगाय नमः सर्वाङ्गे ॥

ॐ ह्रीं श्रीं जगदीशानी ह्रीं श्रीं बीजा जगत्प्रिया।
ॐ श्रीं जयप्रदा ॐ ह्रीं जया ह्रीं जयवर्द्धिनी ॥ ८॥

ॐ ह्रीं श्रीं वां जगन्माता श्रीं क्लीं जगद्वरप्रदा ।

ॐ ह्रीं श्रीं जूं जटिनी ह्रीं क्लीं जयदा श्रीं जगन्धरा ॥ ९॥

ॐ क्लीं ज्योतिष्मती ॐ जूं जननी श्रीं जरातुरा।
ॐ स्त्रीं जूं जगती ह्रीं श्रीं जप्या ॐ जगदाश्रया ॥ १०॥

ॐ श्रीं जूं सः जगन्माता ॐ जूं जगत् क्षयंङ्करी ।
ॐ श्रीं क्लीं जानकी स्वाहा श्रीं क्लीं ह्रीं जातरूपिणी ॥ ११॥

ॐ श्रीं क्लीं जाप्यफलदा ॐ जूं सः जनवल्ल्भा ।
ॐ श्रीं क्लीं जननीतिज्ञा ॐ श्रीं जनत्रयेष्टदा ॥ १२॥

ॐ क्लीं कमलपत्राक्षी ॐ श्रीं क्लीं ह्रीं च कामिनी ।
ॐ गूं घोररवा ॐ श्रीं घोररूपा हसौः गतिः ॥ १३॥

ॐ गं गणेश्वरी ॐ श्रीं शिववामाङ्गवासिनी ।
ॐ श्रीं शिवेष्टदा स्वाहा ॐ श्रीं शीतातप्रिया ॥ १४॥

ॐ श्रीं गूं गणमाता च ॐ श्रीं क्लीं गुणरागिणी ॥

ॐ श्रीं गणेशमाता च ॐ श्रीं शङ्करवल्लभा ॥ १५॥

ॐ श्रीं क्लीं शीतलाङ्गी श्रीं शीतला श्रीं शिवेश्वरी ।
ॐ श्रीं क्लीं ग्लौं गजराजस्था ॐ श्रीं गीं गौतमी तथा ॥ १६॥

ॐ घां घुरघुरनादा च ॐ गीं गीतप्रिया हसौः ।
ॐ घां घरिणी घटान्तःस्था ॐ गीं गन्धर्वसेविता ॥१७॥

ॐ गौं श्रीं गोपति स्वाहा ॐ गीं गौं गणप्रिया ।
ॐ गीं गोष्ठी हसौः गोप्या ॐ गीं धर्मान्सुलोचना ॥ १८॥

ॐ श्रीं गन्त्रीं हसौः घण्टा ॐ घं घण्टारवाकुला ।
ॐ घ्रीं श्रीं घोररूपा च ॐ गीं श्रीं गरुडी हसौः ॥ १९॥

ॐ गीं गणया हसौः गुर्वी ॐ श्रीं घोरद्युतिस्तथा ।
ॐ श्रीं गीं गणगन्धर्वसेवताङ्गी गरीयसी ॥ २०॥

ॐ श्रीं गाथ हसौः गोप्त्री ॐ गीं गणसेविता ॥

ॐ श्रीं गुणमति स्वाहा श्रीं क्लीं गौरी हसौः गदा ॥ २१॥

ॐ श्रीं गीं गौररूपा च ॐ गीं गौरस्वरा तथा ।
ॐ श्रीं गीं क्लीं गदाहस्ता ॐ गीं गोन्दा हसौः पयः ॥ २२॥

ॐ श्रीं गीं क्लीं गम्यरूपा च ॐ अगम्या हसौः वनम् ॥

ॐ श्रीं घोरवदना घोराकारा हसौः पयः ॥ २३॥

ॐ ह्रीं श्रीं क्लीं कोमलाङ्गी च ॐ क्रीं कालभयङ्करी ।
ऊ क्रीं कर्पतहस्ता च क्रीं हूं कादम्बरी हसौः ॥ २४॥

क्रीं श्रीं कनकवर्णा च ॐ क्रीं कनकभूषणा ।
ॐ क्रीं काली हसौः कान्ता क्रीं हूं कारुण्यरूपिणी ॥ २५॥

ॐ क्रीं श्रीं कूटप्रिया क्रीं हूं त्रिकुता क्रीं कुलेश्वरी ।
ॐ क्रीं कम्बलवस्त्रा च क्रीं पीताम्बरसेविता ॥ २६॥

क्रीं श्रीं कुल्या हसौः कीर्तिः क्रीं श्रीं क्लीं क्लेशहारिणी ।
ॐ क्रीं कूटालया क्रीं ह्रीं कूटकर्त्री हसौः कुटीः ॥ २७॥

ॐ श्रीं क्लीं कामकमला क्लीं शीं कमला क्रीं च कौरवी ।
ॐ क्लीं श्रीं कुरुरवा ह्रीं श्रीं हाटकेश्वरपूजिता ॥ २८॥

ॐ ह्रां रां रम्यरूपा च ॐ श्रीं क्लीं काञ्चनाङ्गदा ।
ॐ क्रीईं श्रीं कुण्डली क्रीं हूँ काराबन्धनमोक्षदा ॥ २९॥

ॐ क्रीं कुर हसौः क्लऊ ब्लू ॐ क्रीं कौरवमर्दिनी ।
ॐ श्रीं कटु हसौः कुण्टी ॐ श्रीं कुष्ठक्षयङ्करी ॥ ३०॥

ॐ श्रीं चकोरकी कान्ता क्रीं श्रीं कापालिनी परा ।
ॐ श्रीं क्लीं कालिका कामा ॐ श्रीं ह्रीं क्लीं कलङ्किता॥ ३१॥

क्रीं श्रीं क्लीं क्रीं कठोराङ्गी ॐ श्रीं कपटरूपिणी ।
ॐ क्रीं कामवती क्रीं श्रीं कन्या क्रीं कालिका हसौः ॥ ३२॥

ॐ श्मशानकालिका श्रीं क्लीं ॐ क्रीं श्रीं कुटिलालका ।
ॐ क्रीं श्रीं कुटिलभ्रूश्च क्रीं हूं कुटिलरूपिणी ॥ ३३॥

ॐ क्रीं कमलहस्ता च क्रीं कुण्टी ॐ क्रीं कौलिनी ।
ॐ श्रीं क्लीं कण्ठमध्यस्था क्लीं कान्तिस्वरुपिणी ॥ ३४॥

ॐ क्रीं कार्तस्वरूपा च ॐ क्रीं कात्यायनी हसौः ।
ॐ क्रीं कलावती हसौः काम्या क्रीं कलानिधीशेश्वरी ॥ ३५॥

ॐ क्रीं श्रीं सर्वमध्यस्था ॐ क्रीं सर्वेश्वरी पयः ।
ॐ क्रीं हूं चक्रमध्यस्था ॐ क्रीं श्रीं चक्ररूपिणी ॥ ३६॥

ॐ क्रीं हूँ चं चकोराक्षी ॐ चं चन्दनशीतला ।
ॐ चं चर्माम्बरा हूं क्रीं चारुहासा हसौः च्युता ॥ ३७॥

ॐ श्रीं चौरप्रिया हूँ च चार्वङ्गी श्रीं चलाऽचला ।
ॐ श्रीं हूँ कामराज्येष्टा कुलिनी क्रीं हसौः कुहू ॥ ३८॥

ॐ क्रीं क्रिया कुलाचारा क्रीं क्रीं कमलवासिनी ।
ॐ क्रीं हेलाः हसौः लीलाः ॐ क्रीं कालवासिनी ॥ ३९॥

ॐ क्रीं कालप्रिया हूं क्रीं कालरात्रि हसौः बला ।
ॐ क्रीं श्रीं शशिमध्यस्था क्रीं श्रीं कन्दर्पलोचना ॥ ४०॥

ॐ क्रीं शीताञ्शुमुकुटा क्रीं श्रीं सर्ववरप्रदा ।
ॐ श्रीं श्याम्बरा स्वाहा ॐ श्रीं श्यामलरूपिणी ॥ ४१॥

ॐ श्रीं क्रीं श्रीं सती स्वाहा ॐ क्रीं श्रीधरसेविता ।
ॐ श्रीं रूक्षा हसौः रम्भा ॐ क्रीं रसवर्तिपथा ॥ ४२॥

ॐ कुण्डगोलप्रियकरी ह्रीं श्रीं ॐ क्लीं कुरूपिणी ।
ॐ श्रीं सर्वा हसौः तृप्तिः ॐ श्रीं तारा हसौः त्रपा ॥ ४३॥

ॐ श्रीं तारुण्यरूपा च ॐ क्रीं त्रिनयना पयः ।
ॐ श्रीं ताम्बूलरक्तास्या ॐ क्रीं उग्रप्रभा तथा ॥ ४४॥

ॐ श्रीं उग्रेश्वरी स्वाहा ॐ श्रीं उग्ररवाकुला ।
ॐ क्रीं च सर्वभूषाढ्या ॐ श्रीं चम्पकमालिनी ॥ ४५॥

ॐ श्रीं चम्पकवल्ली च ॐ श्रीं च च्युतालया ।

ॐ श्रीं द्युतिमति स्वाहा ॐ श्रीं देवप्रसूः पयः ॥ ४६॥

ॐ श्रीं दैत्यारिपूजा च ॐ क्रीं दैत्यविमर्दिनी ।
ॐ श्रीं द्युमणिनेत्रा च ॐ श्रीं दम्भविवर्जिता ॥ ४७॥

ॐ श्रीं दारिद्रयराशिध्नी ॐ श्रीं दामोदरप्रिया ।
ॐ क्लीं दर्पापहा स्वाहा ॐ क्रीं कन्दर्पलालसा ॥ ४८॥

ॐ क्रीं करीरवृक्षस्था ॐ क्रीं हूँङ्कारिगामिनी ।
ॐ क्रीं शुकात्मिका स्वाहा ॐ क्रीं शुककरा तथा ॥ ४९॥

ॐ श्रीं शुकश्रुतिः श्रीं क्लीं श्रीं ह्रीं शुककवित्वदा ।
ॐ क्रीं शुकप्रसू स्वाहा ॐ श्रीं क्रीं शवगामिनी ॥ ५०॥

ॐ रक्ताम्बरा स्वाहा ॐ क्रीं पीताम्बरार्चिता ।
ॐ श्रीं क्रीं स्मितसंयुक्ता ॐ श्रीं सौः स्मरा पुरा ॥ ५१॥

ॐ श्रीं क्रीं हूँ च स्मेरास्या ॐ श्रीं स्मरविवद्धिनी ।
ॐ श्री सर्पाकुला स्वाहा ॐ श्रीं सर्वोपवेशिनी ॥ ५२॥

ॐ क्रीं सौः सर्पकन्या च ॐ क्रीं सर्पासनप्रिया ।
सौः सौः क्लीं सर्वकुटिला ॐ श्रीं सुरसुरार्चिता ॥ ५३॥

ॐ श्रीं सुरारिमथिनी ॐ श्रीं सुरिजनप्रिया ।
ऐं सौः सूर्येन्दुनयना ऐं क्लीं सूर्यायुतप्रभा ॥ ५४॥

ऐं श्रीं क्लीं सुरदेव्या च ॐ श्रीं सर्वेश्वरी तथा ।
ॐ श्रीं क्षेमकरी स्वाहा ॐ क्रीं हूँ भद्रकालिका ॥ ५५॥

ॐ श्रीं श्यामा हसौः स्वाहा ॐ श्रीं ह्रीं शर्वरीस्वाहा ।
ॐ श्रीं क्लीं शर्वरी तथा ॐ श्रीं क्लीं शान्तरूपिणी ॥ ५६॥

ॐ क्रीं श्रीं श्रीधरेशानी ॐ श्रीं क्लीं शासिनी तथा ।
ॐ क्लीं शितिर्हसौः शौरी ॐ श्रीं क्लीं शारदा तथा ॥ ५७॥

ॐ श्रीं ह्रीं शारिका स्वाहा ॐ श्रीं शाकम्भरी तथा ।
ॐ श्रीं क्लीं शिवरूपा च ॐ श्रीं क्लीं कामचारिणी ॥ ५८॥

ॐ यं यज्ञेश्वरी स्वाहा ॐ श्रीं यज्ञप्रिया सदा ।
ॐ ऐं क्लीं यं यज्ञरूपा च ॐ श्रीं यं यज्ञदक्षिणा ॥ ५९॥

ॐ श्रीं यज्ञार्चिता स्वाहा ॐ यं याज्ञिकपूजिता ।
श्रीं ह्रीं यं यजमानस्त्री ॐ यज्वा हसौः वधूः ॥ ६०॥

श्रीं वां बटुकपूजिता ॐ श्रीं वरूथिनी स्वाहा ॥

ॐ क्रीं वार्ता हसौः ॐ श्रीं वरदायिनी स्वाहा॥ ६१॥

ॐ श्रीं क्लीं ऐं च वाराही ॐ श्रीं क्लीं वरवर्णिनी ।
ॐ ऐं सौः वार्तदा स्वाहा ॐ श्रीं वाराङ्गना तथा॥ ६२॥

ॐ श्रीं वैकुण्ठपूजा च वां श्रीं ऐं क्लीं च वैष्णवी ।
ॐ श्रीं ब्रां ब्राह्मणी स्वाहा ॐ क्रीं ब्राह्मणपूजिता ॥ ६३॥

ॐ श्रीं ऐं क्लीं च इन्द्राणी ॐ क्लीं इन्द्रपूजिता ।
ॐ श्रीं क्लीं ऐन्द्रि ऐं स्वाहा ॐ श्रीं क्लीं इन्दुशेखरा ॥ ६४॥

ॐ ऐं इन्द्रसमानाभा ॐ ऐं क्लीं इन्द्रवल्लभा ।
ॐ श्रीं इडा हसौः नाभिः ॐ श्रीं ईश्वरपूजिता ॥ ६५॥

ॐ ब्रां ब्राह्मी क्लीं रुं रुद्राणी ॐ ऐं द्रीं श्रीं रमा तथा ।
ॐ ऐं क्लीं स्थाणुप्रिया स्वाहा ॐ गीं पदक्षयकरी ॥ ६६॥

ॐ गीं गीं श्रीं गुरस्था च ऐं क्लीं गुदविवर्द्धिनी ।
ॐ श्रीं क्रीं क्रूं कुलीरस्था ॐ क्रीं श्रीं कूर्मपृष्ठगा ॥ ६७॥

ॐ श्रीं धूं तोतला स्वाहा ॐ त्रौं त्रिभुवनार्चिता ।
ॐ प्रीं प्रीतिर्हसौः प्रीतां प्रीं प्रभा प्रीं पुरेश्वरी ॥ ६८॥

ॐ प्रीं पर्वतपुत्री च ॐ प्रीं पर्वतवासिनी ।
ॐ श्रीं प्रीतिप्रदा स्वाहा ॐ ऐं सत्त्वगुणाश्रिता ॥ ६९॥

ॐ क्लीं सत्यप्रिया स्वाहा ऐं सौं क्लीं सत्यसङ्गरा ।
ॐ श्रीं सनातनी स्वाहा ॐ श्रीं सागरशायिनी ॥ ७०॥

ॐ क्लीं चं चन्द्रिका ऐं सौं चन्द्रमण्डलमध्यगा ।

ॐ श्रीं चारुप्रभा स्वाहा ॐ क्रीं प्रें प्रेतशायिनी ॥ ७१॥

ॐ श्रीं श्रीं मथुरा ऐं क्रीं काशी श्रीं श्रीं मनोरमा ।
ॐ श्रीं मन्त्रमयी स्वाहा ॐ चं चन्द्रकशीतला ॥ ७२॥

ॐ श्रीं शाङ्करी स्वाहा ॐ श्रीं सर्वाङ्गवासिनी ।
ॐ श्रीं सर्वप्रिया स्वाहा ॐ श्रीं क्लीं सत्यभामिनी ॥ ७३॥

ॐ क्लीं सत्यात्मिका स्वाहा ॐ क्लीं ऐं सौः च सात्त्विकी ।
ॐ श्रीं रां राजसी स्वाहा ॐ क्रीं रम्भोपमा तथा ॥ ७४॥

ॐ श्रीं राघवसेव्या च ॐ श्रीं रावणघातिनी ।
ॐ निशुम्भोहन्त्री ह्रीं श्रीं क्लीं ॐ क्रीं शुम्भमदापहा ॥ ७५॥

ॐ श्रीं रक्तप्रिया हरा ॐ श्रीं क्रीं रक्तबीजक्षयङ्करी ।
ॐ श्रीं माहिषपृष्टस्था ॐ श्रीं महिषघातिनी ॥ ७६॥

ॐ श्रीं माहिषे स्वाहा ॐ श्रीं श्रीं मानवेष्टदा ।
ॐ श्रीं मतिप्रदा स्वाहा ॐ श्रीं मनुमयी तथा ॥ ७७॥

ॐ श्रीं मनोहराङ्गी च ॐ श्रीं माधवसेविता ।
ॐ श्रीं माधवस्तुत्या च ॐ श्रीं वन्दीस्तुता सदा ॥ ७८॥

ॐ श्रीं मानप्रदा स्वाहा ॐ श्रीं मान्या हसौः मतिः ।
ॐ श्रीं श्रीं भामिनी स्वाहा ॐ श्रीं मानक्षयङ्करी ॥ ७९॥

ॐ श्रीं मार्जारगम्या च ॐ श्रीं श्रीं मृगलोचना ।
ॐ श्रीं मरालमतिः ॐ श्रीं मुकुरा प्रीं च पूतना ॥ ८०॥

ॐ श्रीं परापरा च ॐ श्रीं परिवारसमुद्भवा ।
ॐ श्रीं पद्मवरा ऐं सौः पद्मोद्भवक्षयङ्करी ॥ ८१॥

ॐ प्रीं पद्मा हसौः पुण्यै ॐ प्रीं पुराङ्गना तथा ।
ॐ प्रीं पयोदृशदृशी ॐ प्रीं परावतेश्वरी ॥ ८२॥

ॐ पयोधरनम्रङ्गी ॐ ध्रीं धाराधरप्रिया ।
ॐ धृति ऐं दया स्वाहा ॐ ॐ श्रीं क्रीं श्रीं दयावती ॥ ८३॥

ॐ श्रीं द्रुतगतिः स्वाहा ॐ द्रीं द्रं वनघातिनी ।
ॐ चं चर्माम्बरेशानी ॐ चं चण्डालरूपिणी ॥ ८४॥

ॐ चामुण्डाहसौः चण्डी ॐ चं क्रीं चण्डिकापयः ।
ॐ क्रीं चण्डप्रभा स्वाहा ॐ चं क्रीं चारुहासिनी ॥ ८५॥

ॐ क्रीं श्रीं अच्युतेष्टा ह्रीं चण्डमुण्डक्षयकरी ।
ॐ त्रीं श्रीं त्रितये स्वाहा ॐ श्रीं त्रिपुरभैरवी ॥ ८६॥

ॐ ऐं सौः त्रिपुरानन्दा ॐ ऐं त्रिपुरसूदिना ।
ॐ ऐं क्लीं सौः त्रिपुरध्यक्षा ऐं त्रौं श्रीं त्रिपुराऽऽश्रया ॥ ८७॥

ॐ श्रीं त्रिनयने स्वाहा ॐ श्रीं तारा वरकुला ।
ॐ श्रीं तुम्बुरुहस्ता च ॐ श्रीं मन्दभाषिणी ॥ ८८॥

ॐ श्रीं महेश्वरी स्वाहा ॐ श्रीं मोदकभक्षिणी ।
ॐ श्रीं मन्दोदरी स्वाहा ॐ श्रीं मधुरभाषिणी ॥ ८९॥

ॐ म्रीं श्रीं मधुरलापा ॐ श्रीं मोहितभाषिणी ।
ॐ श्रीं मातामही स्वाहा ॐ मान्या म्रीं मदालसा ॥ ९०॥

ॐ म्रीं मदोद्धता स्वाहा ॐ म्रीं मन्दिरवासिनी ।
ॐ श्रीं क्लीं षोडशारस्था ॐ म्रीं द्वादशरूपिणी ॥ ९१॥

ॐ श्रीं द्वादशपत्रस्था ॐ श्रीं अं अष्टकोणगा ।
ॐ म्रीं मातङ्गी हसौः श्रीं क्लीं मत्तमातङ्गगामिनी ॥ ९२॥

ॐ म्रीं मालापहा स्वाहा ॐ म्रीं माता हसौः सुधा ।
ॐ श्रीं सुधाकला स्वाहा ॐ श्रीं म्रीं मांसिनी स्वाहा ॥ ९३॥

ॐ म्रीं माला करी तथा ॐ म्रीं मालाभूषिता ।
ॐ म्रीं माध्वी रसापूर्णा ॐ श्रीं सूर्या हसौः सती ॥ ९४॥

ॐ ऐं सौः क्लीं सत्यरूपा ॐ श्रीं दीक्षाहसौः दरी ।
ॐ द्रीं दातृप्रिया ह्रीं श्रीं दक्षयज्ञविनाशिनी ॥ ९५॥

ॐ दातृप्रसू स्वाहा ॐ श्रीं दाता हसौः पयः
ॐ श्रीं ऐं सौः च सुमुखी ॐ ऐं सौः सत्यवारुणी ॥ ९६॥

ॐ श्रीं साडम्बरा स्वाहा ॐ श्रीं ऐं सौः सदागतिः ।
ॐ श्रीं सीता हसौः सत्या ॐ ऐं सन्तानशायिनी ॥ ९७॥

ॐ ऐं सौः सर्वदृष्टिश्च ॐ क्रीं कल्पान्तकारिणी ।
ॐ श्रीं चन्द्रकल्लधरा ॐ ऐं श्रीं पशुपालिनी ॥ ९८॥

ॐ श्रींशिशुप्रिया ऐं सौः शिशूत्सङ्गनिवेशिता ।
ॐ ऐं सौः तारिणी स्वाहा ॐ ऐं क्लीं तामसी तथा॥ ९९॥

ॐ म्रीं मोहान्धकारघ्नी ॐ म्रीं मत्तमनास्तथा ।
ॐ म्रीं श्रीं माननीया च ॐ प्रीं पूजाफलदा ॥ १००॥

ॐ श्रीं श्रीं श्रीफला स्वाहा ॐ श्रीं क्लीं सत्यरूपिणी ।
ॐ श्रीं नारायणी स्वाहा ॐ श्रीं नूपुराकिला ॥ १०१॥

ॐ म्रीं श्रीं नारसिंही च ॐ म्रीं नारायाणप्रिया ।
ॐ म्रीं हंसगतिः स्वाहा ॐ श्रीं हंसौ हसौः पयः ।१०२॥

ॐ श्रीं क्रीं करवालेष्टा ॐ क्रीं कोटरवासिनी ॥

ॐ क्रीं काञ्चनभूषाढ्या ॐ क्रीं श्रीं कुरीपयः ॥ १०३॥

ॐ क्रीं शशिरूपा च श्रीं सः सूर्यरूपिणी ।
ॐ श्रीं वामप्रिया स्वाहा ॐ वीं वरुणपूजिता ॥ १०४॥

ॐ वीं वटेश्वरी स्वाहा ॐ वीं वामनरूपिणी ।
ॐ रं व्रीं श्रीं खेचरी स्वाहा ॐ रं व्रीं श्रीं साररूपिणी ॥ १०५॥

ॐ रं ब्रीं खड्गधारिणी स्वाहा ॐ रं ब्रीं खप्परधारिणी ।
ॐ रं ब्रीं खर्परयात्रा च ॐ प्रीं प्रेतालया तथा ॥ १०६॥

ॐ श्रीं क्लीं प्रीं च दूतात्मा ॐ प्रीं पुष्पवर्द्धिनी ।
ॐ श्रीं श्रीं सान्तिदा स्वाहा ॐ प्रीं पातालचारिणी ॥ १०७॥

ॐ म्रीं मूकेश्वरी स्वाहा ॐ श्रीं श्रीं मन्त्रसागरा ।
ॐ श्रीं क्रीं क्रयदा स्वाहा ॐ क्रीं विक्रयकारिणी ॥ १०८॥

ॐ क्रीं क्रयात्मिका स्वाहा ॐ क्रीं श्रीं क्लीं कृपावती ।
ॐ क्रीं श्रीं ब्रां विचित्राङ्गी ॐ श्रींक्लीं वीं विभावरी ॥ १०९॥

ॐ वीं श्रीं विभावसुनेत्रा ॐ वीं श्रीं वामकेश्वरी ।
ॐ श्रीं वसुप्रदा स्वाहा ॐ श्रीं वैश्रवणार्चिता ॥ ११०॥

ॐ भैं श्रीं भाग्यदा स्वाहा ॐ भैं भैं भगमालिनी ।
ॐ भैं श्रीं भगोदरा स्वाहा ॐ भैं क्लीं वैन्दवेश्वरी ॥ १११॥

ॐ भैं श्रीं भवमध्यस्था ऐं क्लीं त्रिपुरसुन्दरी ।
ॐ श्रीं क्रीं भीतिहर्त्री च ॐ भैं भूतभयङ्करी ॥ ११२॥

ॐ भैं भयप्रदा भैं श्रीं भगिनी भैं भयापहा ।
ॐ ह्रीं श्रीं भोगदा स्वाहा श्रीं क्लीं ह्रीं भुवनेश्वरी ॥ ११३॥

इति श्रीदेवदेवेशि ! नाम्ना साहस्रकोत्तमः ।
मन्त्रगर्भं परं रम्यं गोप्यं श्रीदं शिवात्मकम् ॥ ११४॥

माङ्गल्यं भद्रद सेव्यं सर्वरोगक्षयङ्करम् ।
सर्वदारिद्र्यराशिघ्नं सर्वामरप्रपूजितम् ॥ ११५॥

रहस्यं सर्वदेवानां रहस्यं सर्वदेहिनाम् ।
दिव्यं स्तोत्रमिदं नाम्नां सहस्रमनुभिर्युतम् ॥ ११६॥

परापरं मनुमयं परापररहस्यकम् ।
इदं नाम्नां सहस्राख्यं स्तवं मन्त्रमयं परम् ॥ ११७॥

पठनीयं सदा देवि ! शून्यागारे चतुष्पथे ।
निशीथे चैव मध्याह्ने लिखेद् यत्नेन देशिकः ॥ ११८॥

गन्धैश्च कुसुमैश्चैव कर्पूरेण च वासितैः ।
कस्तूरीचन्दनैर्देवि ! दूर्वया च महेश्वरी ! ॥ ११९॥

रजस्वलाया रक्तेन लिखेन्नाम्नां सहस्रकम् ।
लिखित्वा धारयेन्मूर्ध्नि साधकः सुभवाञ्छकः ॥ १२०॥

यं यं कामयते कामं तं तं प्राप्नोति लीलया ।
अपुत्रो लभते पुत्रान् धनार्थी लभते धनम् ॥ १२१॥

कन्यार्थी लभते कन्यां विद्यार्थी शास्त्रपारगः ।
वन्ध्या पुत्रयुता देवि ! मृतवत्सा तथैव च ॥ १२२॥

पुरुषो दक्षिणे बाहौ योषिद् वामकरे तथा ।
धृत्वा नाम्नां सहस्रं तु सर्वसिद्धिर्भवेद् ध्रुवम् ॥ १२३॥

नात्र सिद्धाद्यपेक्षाऽस्ति न वा मित्रारिदूषणम् ।
सर्वसिद्धिकृतं चैतत् सर्वाभीष्टफलप्रदम् ॥ १२४॥

मोहान्धकारापहरं महामन्त्रमयं परं ।
इदं नाम्नां सहस्रं तु पठित्वा त्रिविधं दिनम् ॥ १२५॥

रात्रौ वारत्रयं चैव तथा मासत्रयं शिवे ! ।
बलिं दद्याद् यथाशक्त्या साधकः सिद्धिवाञ्छकः ॥ १२६॥

सर्वसिद्धियुतो भूत्वा विचरेद् भैरवो यथा।
पञ्चम्यां च नवम्यां च चतुर्दश्यां विशेषतः ॥ १२७॥

पठित्वा साधको दद्याद् बलिं मन्त्रविधानवित् ।
कर्मणा मनसा वाचा साधको भैरवो भवेत् ॥ १२८॥

अस्य नाम्नां सहस्रस्य महिमानं सुरेश्वरि !।
वक्तुं न शक्यते देवि ! कल्पकोटिशतैरपि ॥ १२९॥

मारीभये चौरभये रणे राजभये तथा ।
अग्निजे वायुजे चैव तथा कालभये शिवे !॥ १३०॥

वनेऽरण्ये श्मशाने च महोत्पाते चतुष्पथे ।
दुर्भिक्षे ग्रहपीडायां पठेन्नाम्नां सहस्रकम् ॥ १३१॥

तत् सद्यः प्रशमं याति हिमवद्भास्करोदये ।
एकवारं पठेत् पात्रः तस्य शत्रुर्न जायते ॥ १३२॥

त्रिवारं सुपठेद् यस्तु स तु पूजाफलं लभेत् ।
दशावर्तं पठेत् यस्तु देवीदर्शनमाप्नुयात् ॥ १३३॥

शतावर्तं पठेद् यस्तु स सद्यो भैरवोपमः ।

इदं रहस्यं परमं तव प्रीत्या मया स्मृतम् ॥ १३४॥

गोपनीयं प्रयत्नेन चेत्याज्ञा परमेश्वरि ! ।
नाभक्तेभ्यस्तु दातव्यो गोपनीयं महेश्वरि ॥ १३५॥

॥ इति श्रीभुवनेश्वरीरहस्ये श्रीभुवनेश्वरीमन्त्रगर्भसहस्रनामकं सम्पूर्णम् ॥